# मल्लशर्मकृता शिक्षा

नत्वा गणपतिं देवं ध्यात्वा श्रीकुलदेवताम्
मल्लशर्मा हस्तपूर्वां करोमि स्वरप्रक्रियाम्  १

नत्वा विघ्नहरं सदा शुभकरं सर्वस्य कामप्रदम्
स्मृत्वा श्रीगुरुपादुकां सुललितां ध्यात्वा परां देवताम्

वेदे वाजसनेयके त्वधिकृता विप्राश्च ये सत्तमाः
तेषामेव कृते कृता न कुधियां हस्तस्वरप्रक्रिया  २

अथ साधारणनियमः तथा प्रातिशाख्ये मनुः
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते  ३

तथा उत्तानपाणिं फणवत्कृत्वा सह शलाकया
गुरुं प्रणम्य मनसा ततः स्वाध्यायवान्भवेत्  ४

अत्र जपादौ हस्तस्वरवर्णहीनस्यानधिकारत्वं रावणेन
स्वराङ्कुशे याज्ञवल्क्येन शिक्षायां च बोधितम्

तथा हि–हस्तहीनं तु योऽधीते हस्तस्वरविवर्जितम्
ऋग्यजुः सामभिर्दग्धो वियोनिमधिगच्छति  ५
इति याज्ञवल्क्यशिक्षायां चोक्तम्

जपादौ नाधिकारोऽस्ति सम्यक् पाठमजानतः
इत्युक्तं प्रातिशाख्ये

मन्त्रो हीनः स्वरतो वर्णतो वामिथ्या प्रयुक्तो न तमर्थमाह
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्  ६

इत्यपि तत्रैवोक्तम् एतेन हस्तस्वरवर्णयुक्त एव
वेदोऽध्येतव्य इत्यतो हस्तस्वरप्रक्रियोच्यते तत्र

तावद्धस्तस्वरस्य मूलस्थानं श्लोकैकेन कथ्यते तथा
आदौ हस्तं न्यसेन्मध्ये स्थितिरेषा सनातनी
ततः स्वरानुकूल्येन गतिस्तस्य न संशयः ७

इति मूलस्थानम् अधस्तात्प्रव्रजन्पूर्वामूर्द्धन्मध्ये च तिष्ठति
मध्यतो दक्षिणं गच्छेद्दक्षिणाद्याति चोत्तरे ८

दृष्ट्वा जात्यस्वरं शीघ्रं मध्यतो याति चोत्तरम्
उत्तराद्यात्यधो हस्तं स्वरं दृष्ट्वा च दक्षिणे ९

अर्द्ध न्युब्जे ततः पाणिरधस्ताद्याति दक्षिणे
सम्पूर्णे सत्यधो गच्छेदधस्ताच्च न संशयः १०

सिँह्यसि प्रतीकं च ह्यवसानं विना करम्
मध्यतो याति सर्वत्र व्यूद्ध्र्वमेव सुनिश्चितम् ११

अनुदात्तसमूहो यान्वर्णानाश्रित्य तिष्ठति
ते युक्तास्तं परित्यक्तुमशक्ता निजबन्धुवत् १२

स्वरितेऽप्येवमेव स्याद्दक्षिणाँसे विशेषतः
न च पूर्वोक्तनियमो विद्यतेऽत्रेति निश्चितम् १३

प्रतीकेऽपि विशेषोक्तिर्म्मन्यते वानुवर्तिनम् १४

इति सामान्यविधिः

एकारेण समा रेखा मूर्द्धि वर्णस्य या स्थिता
वामगान्तां विजानीयादूर्ध्वगाँ ह्यूद्ध्वसंस्थिताम् १५

तिर्य्यग्रेखा च वर्णस्य पादपार्श्वे स्थिता तु या
ऊर्ध्वरेखासहायेन तस्यास्तु स्यादधोगतिः १६

वामरेखासहायेन गतिस्तस्यास्तु दक्षिणे
विन्दोर्गतिश्च जात्यस्य मध्ये स्यादिति निश्चितम् १७

अर्द्धन्युब्जस्य पूर्णस्य दक्षिणः स्यात्त्वधो गतिः
इति चतुस्स्वरगतिः

पूर्णार्हन्युब्जजात्यानां सञ्ज्ञा सम्यक् क्रमेण हि
अङ्कैः षड्भिश्चतुर्भिश्च स्वरविद्भिरुदीरिता १८
इति पूर्णार्द्धन्युब्जजात्याना सञ्ज्ञा

अथ हस्तस्वरगतिप्रमाणम्
यडङ्गुलिप्रमाणानि दक्षिणे च तथोत्तरे
ऊर्ध्वेनवाङ्गुलिर्ज्ञेया गतिः पाणेरधस्तथा १९

वामे च दक्षिणाद्याति चार्द्धेऽधस्तात्तथैव च
अष्टादशाङ्गुलिर्ज्ञेया गतिर्हस्तस्य सुस्थिरा २०
इति हस्तस्वरगतिप्रमाणम्

अथ विसर्गोच्चारणप्रमाणम्
ह्रस्वाद्दीर्घाच्च परतो विसर्गश्चेत्तदा बुधः
ह्रस्वस्वरानुकूल्येनोच्चारयेत्तं सदा बुधैः २१
इति विसर्गोच्चारणप्रमाणम्

अथाङ्गुलिनिस्सरणम्
ह्रस्वे स्वरितसंय्युक्ते वर्णे च सविसर्गके
कनिष्ठा तर्जनी चैव निष्कास्या हि स्वयूथतः २२

दीर्घे स्वरितसम्प्राप्ते ह्येकामेव कनिष्ठिकाम्
जात्ये युग्मं विशेषेण त्यक्तव्यमिति निश्चितम् २३

स्वरितेभ्यः क्रमेणैव दक्षिणोत्तरगामिनी
कनिष्ठा तर्जनी चैव त्याज्या तूर्ध्वे हि देशिनी २४

अनुदात्तयुते ह्रस्वे सस्वराच्च परेऽपि वै
सुज्ञैः कनिष्ठिका त्याज्या सविसर्गे द्विजोत्तमैः २५

अथ अं कारसंज्ञा

ह्रस्वादग्रे भवेद्दीर्घो दीर्घादग्रे भवेल्लघुः
देवानां हृदयं त्यक्त्वां स्यादेव द्विलके परे २६

दीर्घे तु देशिनी त्याज्या क्षिप्रं स्याद् द्विलके लघौ
मन्त्रे त्रिधा विधिर्ज्ञेयो ब्राह्मणे तु द्विधा स्मृतः २७

अथ क्षिप्रविचारः तर्जन्याः पृष्ठसंश्लिष्टमङ्गुष्ठं चाग्रनामितम्
तं वै क्षिप्रं विजानीयात्स्वरविद्भिरुदीरितम् २८

इत्यङ्गुलिनिस्सरणम्

अथ रेखाभिरुदात्तानुदात्तस्वरितसंज्ञा

ऊर्ध्वरेखा तु वर्णस्य मूर्ध्नि तिष्ठति या स्थिरा
तामुदात्तं विजानीयाद्द्विह्रस्वे स्वरितं तु ताम् २९

तिर्य्यग्रेखा च वर्णस्य पादपार्श्वे स्थिता तु या
अनुदात्तं विजानीयात्स्वरितं वा सहायतः ३०

वर्णस्य वर्तलाकारं पादे तिष्ठति केवलम्
स्वरितं तु विजानीयात्स्वरविद्भिरुदीरितम् ३१

अथ तकारादिमान्तेषु तर्ज्जन्यङ्गुष्ठयोगादिमुष्ट्यन्ताः क्रियाः कथ्यन्ते

तर्ज्जन्यङ्गुष्ठयोर्योगो नखयोगश्च यस्तयोः
अङ्गुष्ठमध्ये यस्तस्या योगो भवति निश्चितम्  ३२

अत्रैवोक्तः क्रमेणैव नैतदेकेऽवसानगे
विस्वरे च मकारान्ते मुष्टिका च तथैव च  ३३

अथ विचित्रगतिः कोऽदादिति प्रतीके च कौऽसौ च
त्र्यम्बकेऽपि च । एषूदात्तं विजानीयात्तदन्यत्र च मध्यमम्  ३४

स्वरितस्य विशेषेण स्थानं मध्ये ह्युदीरितम्
मध्यतश्च बहिर्गन्तुमशक्यत्वमिति स्थितिः  ३५

वर्णाश्च येन तिष्ठन्ति सञ्ज्ञा तेषां तु तस्य वै
स्वरितस्य विशेषेण ज्ञेयाः स्वरविशारदैः  ३६

त्रयाणां च स्वराणां च त्रिधा सञ्ज्ञा विशेषतः
खल्वेकस्य त्रिधा सञ्ज्ञा मध्यस्थस्वरितस्य च  ३७

तत्समः स्वरजात्यश्च ह्यर्द्धन्युब्जो न तत्समः
सोऽपि पूर्णोऽनुदात्तेन समश्चेति विधिक्रमः  ३८

इति विचित्रगतिः

अथ रेफविशेषोक्तिः

अक्षराणामुपरि यो वेदे रेफः प्रवर्त्तते
स एव शषहर्र्ऋणाँ विपरीतं तु यद्भवेत्  ३९

इति रेफविशेषोक्तिः

अथ ब्राह्मणस्वरसङ्क्षेपः

वामस्था चोपरिष्ठा या मन्त्रे वर्णस्य संस्थितिः
ब्राह्मणे सा तु मध्यस्था ज्ञेया मध्यस्थितापि या  ४०

यदुत्तरमधोयाति मन्त्रे याति च दक्षिणे
तदेव ब्राह्मणाख्ये तु विपरीतगतिर्भवेत् ४१

जात्यं मध्ये स्थितं नित्यमूर्ध्वे न्युब्जं समाश्रितम्
इति सङ्क्षेपनियमो ब्राह्मणेष्वेव निश्चितः ४२

इति ब्राह्मणस्वरसङ्क्षेपविधिः

अथ रङ्गमहारङ्गातिरङ्गाः

सुसन्धेश्चावसानस्य सार्द्धद्व्यङ्केन बिन्दुना
भङ्गं स्यादत्र मन्त्रेण वै रङ्गस्तु भवेदिति ४३

महाशब्दोऽतिशब्दश्च यद्वर्णात्प्राक् प्रवर्तते
महारङ्गोऽतिरङ्गश्च सञ्ज्ञा तस्यैव निश्चिता ४४

अथ रङ्गादीनामुच्चारणे प्रमाणम्

ह्रस्वात्तु द्विगुणो दीर्घो दीर्घादेकगुणः प्लुतः
प्लुतादेकगुणो रङ्गो रङ्गादेकगुणाधिकः ४५

महाशब्देन सँय्युक्तो व्यञ्जनं चार्द्धमात्रिकम्
अतिरङ्गो महारङ्गाद् वृद्धो ह्येकगुणाधिकः ४६
एतत्तु किल वेदे वै ज्ञेयं पूर्णेऽपि सुस्थिरम्

अथ द्विस्स्वरक्रमः

द्विस्स्वरे स्वरहीनस्य गतिस्तूपरि चोत्तरे
जात्ये त्वर्द्धे च सम्पूर्णे न्युब्जे चतुस्स्वरेषु यत् ४७

स एव नियमो ह्येकैर्द्विस्स्वरेऽपि च दर्शितः
भेदेनैव प्रकारस्तु लिपिमात्रे सुनिश्चितः ४८

तिर्यग्रेखा द्विके मध्ये मध्ये वा तिर्यगूर्ध्वयोः
उत्तरं याति सोर्ध्वञ्च विस्वरश्चेत्क्रमेण हि ४९

अथौष्ठमकारस्थानानि

म्रन्ते मिभ्रातौ मोधे च मत्रं मध्यं मधौ मिधौ
रक्षोहणे च मन्त्रे तु बलं त्यक्त्कामलेऽपि च ५०

मिमन्धे च मिभर्तौ च मिभर्यौ मभयेऽपि च
औदुम्बर्य्यात्मके चैवं म्रह्मणे म्राह्मणे मृषे ५१

माधोस्तु महिषं मध्याँ मृहन्ते च मधानके
मृहस्प्पतौ च मिमते मृते माल्बे मभूषते ५२

मिभ्राडिति प्रमुधे च मुध्ने मध्नौ प्रमाहके
मभ्लुशे मदरे म्रध्ने मपायो म्रह्मचर्यके ५३

मटे सोमे च मीभत्से स्कीमे त्रैय्यम्मकेऽपि च
शमले च मलाकायां सञ्ज्ञा सप्तविभक्तिषु ५४

स्थानेष्वेतेषु शिक्षायां याज्ञवल्क्येन भाषिता ५५

अथौष्ठमकारोत्पत्तिः

मकारश्चौष्ठसंज्ञः स्यान्मकारं बिन्दुगर्भकम्
सर्वासामाङ्गलीनान्निस्म रणं कार्यमत्र वै ५६

अथ ठकारस्थानानि

पृष्ठे गोष्ठे च शोचिष्ठेत्यनुष्ठाने च पिष्ठके
अधिष्ठानेऽनधिष्ठाने स्वादिष्ठे च वसिष्ठके ५७

निविष्ठौष्ठवनिष्ठेषु कनिष्ठायां मदिष्ठकं
निष्ठायां चाप्यनिष्ठायां मजाविष्ठां च षष्ठके ५८

प्रतिष्ठायां यविष्ठ्यं च वर्षिष्ठे तिष्ठतेऽपि च
आपोहिष्ठे यजिष्ठे च नेदिष्ठस्त्रिष्ठिनेऽपि च ५९

निष्ठीवने चाखरेष्ठः पुञ्जिष्ठे गह्वरेष्ठके
ज्येष्ठे श्रेष्ठे कनिष्ठे च भूयिष्ठायान्तु पिष्ठके ६०

नरिष्ठ्ठायाँ गरिष्ठ्ठे च भ्राजिष्ठ्ठेऽष्टविभक्तिषु
सप्तस्वेव यथा प्रोक्तः सूरभिः शब्ददर्शिभिः ६१

इति ष्ठाकारस्थानानि

यस्सुबोधाम्पठेन्नित्यमिमाँ च स्वरप्रक्रियाम्
हस्तपूर्वां तु तस्यैव सम्यग्वेदे गतिर्भवेत् ६२

श्रीमता कान्यकुब्जेन ह्युपमन्य्वग्निहोत्रिणा
श्रीमद्वेदस्वरूपाणां श्रीमद्वाक्पतिशर्म्मणाम् ६३

सूनुना पितृभक्तेन मल्लविप्रेण धीमता
विक्रमार्कगताब्देषु चन्द्रवस्वगभूमिषु ६४

ऊर्ज्जमासे सिते पक्षे ह्येकादश्यां शनेर्दिने
कृतेयं बालबोधाय स्वहस्तस्वरप्रक्रिया ६५

इति श्रीमत्कान्यकुब्जीयोपमन्युगोत्रीयाग्निहोत्रिखगपतितनूजपितृ
भक्तघाटमपुरवासिमल्लशर्म्मकृता शिक्षा समाप्ता